म् । ८ । १ । ५३ ॥ लोडन्तं गत्यर्थलोटा युक्तं तिङन्तं वानुदात्तम् । आगच्छ देव ग्रामं प्रविश । सोपसर्ग किम । आगच्छ देव ग्रामं पश्य । अनुत्तमं किम् । आगच्छानि देव ग्रामं प्रविशानि ॥ **हन्त च । ८ । १ । ५४ ॥** हन्तेत्यनेन युक्तमनूत्तमं लोडन्तं वानुदात्तम । हन्त प्रविश । सोपसर्गमित्येव । हन्त कुरु । निपातैर्यद्यदीति निघातप्रतिषेधः । अनुत्तमं किम् । हन्त प्रभुञ्जावहै ॥ **आम एकान्तरमामन्त्रितमनन्तिके । ८ । १ । ५५ ॥** आमः परमेकपदान्तरितमामन्त्रितं नानुदात्तम् । आम् पचसि देवदत्ता ३ । एकान्तरं किम् । आम प्रपचसि देवदत्ता ३ । आमन्त्रित किम् । आम् पचति देवदत्तः । अनन्तिके किम् । आम् पचसि देवदत्त ॥ **यद्धितुपरं छन्दसि । ८ । १ । ५६ ॥** तिङन्तं नानुदात्तम् । उदसृजो यदङ्गिरः । उशन्ति हि । आख्यास्यामि तु ते । निपातैर्यदिति हिचेति तुपश्येति च सिद्धे नियमार्थमिदम । एतैरेव परभूतैर्योगे नान्यैरिति । जाये स्वा रोहावैहि । एहीति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति ॥ **चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः । ८ । १ । ५७ ॥** एषु पदेषु परतस्तिङन्तं नानुदात्तम् । देवः पचति चन । देवः पचति चित । देवः पचतीव । देवः पचति गोत्रम् । देवः पचति कल्पम । देवः पचतिपचति । अगतेः किम् । देवः प्रपचतिचन ॥ **चादिषु च । ८। १। ५८॥** चवाहाहैवेषु तिङन्तं नानुदात्तम । देवः पचति च खादति च ॥ अगतेरित्येव । देवः प्रपचति च । प्रखादति च । प्रथमस्य चवायोग इति निघातः प्रतिषिध्यते द्वितीय तु निहन्यत एव ॥ **चवायोगे प्रथमा । ८ । १ । ५९ ॥** चवेत्याभ्यां योगे प्रथमा तिङ्विभक्तिर्नानुदात्ता । गाश्च चारयति वीणां वा वादयति । इतो वा सातिमीमहे । उत्तरवाक्यगतोऽनुपश्लनीय तिङन्तापेक्षयेयं प्राथमिकी । योगे किम् । पूर्वभूतयोरपि योगे निघातार्थम । प्रथमाग्रहण द्वितीयादेस्तिङन्तस्य मा भूत् ॥ **हेति क्षियायाम् । ८ । १ । ६० ॥** हयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता धर्मव्यतिक्रमे । स्वयं ह रथेन याति ३ । उपाध्यायं पदाति गमयति । क्षियाशीरिति प्लुतः ॥ **अहेति विनियोगे च । ८ । १ । ६१ ॥** अहयुक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता नानाप्रयोजने नियोगे क्षियाया च । त्वमह ग्रामं गच्छ । क्षियायां स्वयमह रथेन याति ३ । उपाध्यायं पदाति नयति ॥ **चाहलोप एवेत्यवधारणम् । ८ । १ । ६२ ॥** च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता । देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्य च गच्छत्वित्यर्थः । देव एव ग्रामं गच्छतु । राम एवारण्यं गच्छतु । ग्रामं केवलमरण्य केवल गच्छत्वित्यर्थः । इहाहलोपः स च केवलार्थः । अवधारणं किम । देव क्व भोक्ष्यसे । न क्वचिदित्यर्थः । अनवक्लृप्तावेव ॥ **चादिलोपे विभाषा । ८ । १ । ६३ ॥** चवाहाहैवाना लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता ।

चलोपे । इन्द्र वाजेषु नोऽव । शुक्ला व्रीहयो भवन्ति । श्वेता गा आज्याय दुहन्ति वालोपे । व्रीहिभिर्यजेत । यवैर्यजेत ॥ **वैवावेति च छन्दसि ।८।१।६४॥** अहर्वै देवानामासीत । अयं वाव हस्त आसीत् ॥ **एकान्याभ्यां समर्थाभ्याम् ।८।१।६५॥** आभ्यां युक्ता प्रथमा तिङ्विभक्तिर्नानुदात्ता छन्दसि । अजामेकां जिन्वति । प्रजामेका रक्षति । तयोरन्यः पिप्पलं स्वाद्वत्ति । समर्थाभ्यां किम् । एको देवानुपातिष्ठत । एक इति संख्यापरं नान्यार्थम् ॥ **यद्वृत्तान्नित्यम् ।८।१।६६॥** यत्र पदे यच्छब्दस्ततःपरं तिङन्तं नानुदात्तम् । यो भुङ्क्ते । यदग्ने यायुर्वाति । अत्र व्यवहिते कार्यमिष्यते ॥ **पूजनात्पूजितमनुदात्तं काष्ठादिभ्यः ।८।१।६७॥** पूजनेभ्यः काष्ठादिभ्यः पूजितवचनमनुदात्तम । काष्ठाध्यापकः । मलोपश्च वक्तव्यः * ॥ दारुणाध्यापकः । अज्ञाताध्यापकः । समासान्तोदात्तत्वापवादः । एतत्समासे इष्यते । नेह । दारुणमध्यापक इति वृत्तिमतम् । पूजनादित्येव । पूजितग्रहणे सिद्धे पूजितग्रहणमनन्तरपूजितलाभार्थम् । एतदेव ज्ञापकमत्र प्रकरणे पञ्चमीनिर्देशेऽपि नानन्तर्यमाश्रीयत इति ॥ **सगतिरपि तिङ् ।८।१।६८॥** पूजनेभ्यः काष्ठादिभ्यस्तिङन्तं पूजितमनुदात्तम । यत्काष्ठं प्रपचति । तिङ्ङतिङ इति निघातस्य निपातैर्यदिति निषेधे प्राप्ते विधिरयम् । सगतिग्रहणाच्च गतिरपि निहन्यते ॥ गतिग्रहणे उपसर्गग्रहणमिष्यते ॥ * ॥ नेह । यत्काष्ठा शुक्लीकरोति ॥ **कुत्सने च सुप्यगोत्रादौ ।८।१।६९॥** कुत्सने च सुबन्ते परे सगतिरगतिरपि तिङनुदात्तः । पचति पूति । प्रपचति पूति । पचति मिथ्या । कुत्सने किम् । प्रपचति शोभनम् । सुपि किम् । पचति क्लिश्नाति । अगोत्रादौ किम् । पचति गोत्रम ॥ क्रियाकुत्सन इति वाच्यम् * ॥ कर्तुः कुत्सने मा भूत् । पचतिपूतिर्देवदत्तः ॥ पूतिश्चानुबन्ध इति वाच्यम * ॥ तेनायं चकारानुबन्धत्वादन्तोदात्तः ॥ वा बह्वर्थमनुदात्तमिति वाच्यम * ॥ पचति पूतिः ॥ **गतिर्गतौ ।८।१।७०॥** अनुदात्तः । अभ्युद्धरति । गतिः किम । दत्तः पचति । गतौ किम् । आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ॥ **तिङि चोदात्तवति ।८।१।७१॥** गतिरनुदात्तः । यत्प्रपचति । तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् । अन्यथा हि यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गतिस्तत्र धातावेवोदात्तवति स्यात् प्रत्यये न स्यात् । उदात्तवति किम् । प्रपचति ॥

## ॥ इति तिङन्तस्वराः ॥

अथ वैदिकवाक्येषु स्वरसञ्चारप्रकारः कथ्यते । अग्निमीळ इति प्रथमा ऋक्

---

१ काष्ठा, दारुण, अमातापुत्र, वेश, अनाज्ञात, अनुज्ञात, अपुत्र, अयुत, अद्भुत, भृश, घोर, सुख, कल्याण, अनुक्त । इति काष्ठादि. ।

पूजितस्यानुदात्तत्वे काष्ठादिग्रहणमिति वार्तिकदर्शनात्सूत्रे काष्ठादिभ्य इति कैश्चित्प्रक्षिप्तमिति कैयटः ।

तत्राग्निशब्दोऽव्युत्पत्तिपक्षे फिष् इत्यन्तोदात्त इति माधवः । वस्तुतस्तु घृतादित्वात् । व्युत्पत्तौ तु निप्रत्ययस्वरेण । अम् सुप्त्वादनुदात्तः । अमि पूर्व इत्येकादेशस्त्वेकादेश उदात्तेनेत्युदात्तः । ईळे । तिङ्ङतिङ इति निघातः । संहितायां तूदात्तादनुदात्तस्येतीकारः स्वरितः । स्वरितात्संहितायामिति ळेइत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरःशब्दोऽन्तोदात्तः पूर्वाधरावराणामित्यसिप्रत्ययस्वरात् । हितशब्दोऽपि । धायो निष्ठायां दधा-[illegible]

[illegible] गतिकारकोपपदात्कृदिति कृदुत्तरपदप्रकृतिस्वरं थाथादिस्वरे च पूर्वपूर्वोपमर्देन प्राप्ते गतिरनन्तर इति पूर्वपदप्रकृतिस्वरः । पुरःशब्दोकारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्यनुदात्ततरः । यज्ञस्य नङः प्रत्ययस्वरः । विभक्तेः सुप्त्वादनुदात्तत्वे स्वरितत्वम् । देवम् । पचाद्यच् । फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण वान्तोदात्तः । ऋत्विक्शब्दः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः । होतृशब्दस्तृन्प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । रत्नशब्दो नविषयस्येत्याद्युदात्तः । रत्नानि दधातीति रत्नधाः । समासस्वरेण कृदुत्तरपदप्रकृतिस्वरेण वान्तोदात्तः । तमपः पित्त्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्रमुन्नेयम् ॥ इत्थं वैदिकशब्दानां दिङ्मात्रमिह दर्शितम् ॥ तदस्तु प्रीतये श्रीमद्भवानीविश्वनाथयोः ॥१॥

इति सिद्धान्तकौमुद्यां श्रीभट्टोजिदीक्षितविरचितायां वैदिकस्वरप्रक्रिया ॥

## ॥ अथ लिङ्गानुशासनम् ॥

**लिङ्गम्** ॥ **स्त्री** ॥ अधिकारसूत्रे एते ॥ **ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः** ॥ ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात् ॥ **अन्यूप्रत्ययान्तो धातुः** ॥ अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम् । देवयतेः क्विप् । द्यूः विशेष्यलिङ्गः ॥ **अशनिभरण्यरणयः पुंसि च** ॥ इयमयं वा अशनिः ॥ **मिन्यन्तः** ॥ मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः ॥ **वह्निवृष्ण्यग्नयः पुंसि** ॥ पूर्वस्यापवादः ॥ **श्रोणियोन्यूर्मयः पुंसि च** ॥ इयमयं वा श्रोणिः ॥ **क्तिन्नन्तः** ॥ स्पष्टम् । कृतिरित्यादि ॥ **ईकारान्तश्च** ॥ ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ॥ **ऊङाबन्तश्च** ॥ कुरूः । विद्या ॥ **य्वन्तमेकाक्षरम्** ॥

श्रीः । भूः । एकाक्षरं किम् । पृथुश्रीः ॥ **विंशत्यादिरानवतेः** ॥ इयं विंशतिः ॥ त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ॥ **दुन्दुभिरक्षेषु** ॥ इयं दुन्दुभिः । अक्षेषु किम् । अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः ॥ **नाभिरक्षत्रिये** ॥ इयं नाभिः ॥ **उभावप्यन्यत्र पुंसि** ॥ दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथं तर्हि समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिरिति भारविः । उच्यते । दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात्पुंस्त्वमपीह साधु । अत एव नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामद इति मेदिनी । रभसोऽप्याह । मुख्यराट्क्षत्रिये नाभिः पुंसि प्राण्यङ्के द्वयोः । चक्रमध्ये प्रधाने च स्त्रियां कस्तूरिकामद इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ॥ **तलन्तः** ॥ अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता ॥ **भूमिविद्युत्सरिल्लतावनिताभिधानानि** ॥ भूमिर्भूः । विद्युत्सौदामनी । सरिन्निम्नगा । लता वल्ली । वनिता योषित् ॥ **यादो नपुंसकम्** ॥ यादःशब्दः सरिद्वाचकोऽपि क्लीबं स्यात् ॥ **भाःस्रुक्स्रग्दिगुष्णिगुपानहः** ॥ एते स्त्रियां स्युः इयं भा इत्यादि ॥ **स्थूणोर्णे नपुंसके च** ॥ एते स्त्रियां क्लीबे च स्तः । स्थूणा । स्थूणम् । ऊर्णा । ऊर्णम् । तत्र स्थूणा काष्ठमयी द्विकर्णिका । ऊर्णा तु मेषादिलोम ॥ **गृहशशाभ्यां क्लीबे** ॥ नियमार्थमिदम् । गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुंसके स्तः । गृहस्थूणम् । शशोर्णं शशलोमनीत्यमरः ॥ **प्रावृड्विप्रुड्रुट्तृड्विड्त्विषः** ॥ एते स्त्रियां स्युः ॥ **दर्विविदिवेदिखनिशान्यसिवेशिकृष्योषधिकट्यङ्गुलयः** ॥ एते स्त्रियां स्युः । पक्षे ङीप् दर्वी । दर्वीरित्यादि ॥ **तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिच्छविरात्र्यादयः** ॥ एते प्राग्वत् इयं तिथिरित्यादि । अमरस्त्वाह । तिथयो द्वयोरिति । तथा च भारविः । तस्य भुवि बहुतिथास्तिथय इति । स्त्रीत्वे हि बहुतिथ्य इति स्यात् । श्रीहर्षश्च । निखिलां निशि पौर्णिमातिथीमिति ॥ **शष्कुलिराजिकुश्यनिर्वातिभ्रुकुटित्रुटिवलिपङ्क्तयः** ॥ एतेऽपि स्त्रियां स्युः । इयं शष्कुलिः ॥ **प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंवित्क्षुत्पुन्मुत्समिधः** ॥ इयं प्रतिपदित्यादि । उषा उच्छती । उषाः प्रातरधिष्ठात्री देवता ॥ **आशीर्धूःपूर्गीर्द्वारः** ॥ इयमाशीरित्यादि ॥ **अप्सुमनस्समासिकतावर्षाणां बहुत्वं च** ॥ अबादीनां पञ्चानां स्त्रीत्वं स्याद्बहुत्वं च । आप इमाः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुलं प्रायिकम् । एका च सिकता तैलदाने असमर्थेति अर्थवत्सूत्रे भाष्यप्रयो-

गात्। समांसमां विजायत इत्यत्र समायां समायामिति भाष्याच्च। विभाषाघ्राधेड्डिति सूत्रे अघ्रासातां सुमनसाविति वृत्तिव्याख्यायां हरदत्तोऽप्येवम्॥ **स्रक्त्वक्ज्योग्वाग्यवागूनौस्फिजः**॥ इयं स्रक् त्वक् ज्योक् वाक् यवागूः नौः स्फिक्॥ **तृटिसीमासंबध्याः**॥ इयं तृटिः। सीमा। सम्बध्या॥ **चुल्लिवेणिखार्यश्च**॥ स्पष्टम्॥ **ताराधाराज्योत्स्नादयश्च**॥ **शलाका स्त्रियां नित्यम्**॥ नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति॥

## ॥ इति स्त्र्यधिकारः॥

**पुमान्**॥ अधिकारोऽयम्॥ **घञबन्तः**॥ पाकः। त्यागः। करः। गरः। भावार्थ एवेदम्। नपुंसकत्वविशिष्टे भावे क्तल्युड्भ्यां स्त्रीत्वविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात्। कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम्। तथा च भाष्यम्। सम्बन्धमनुवर्तिष्यत इति॥ **घाजन्तश्च**॥ विस्तरः। गोचरः। चयः। जय इत्यादि॥ **भयलिङ्गभगपदानि नपुंसके**॥ एतानि नपुंसके स्युः। भयम्। लिङ्गम्। भगम्। पदम्॥ **नङन्तः**॥ नङ्प्रत्ययान्तः पुंसि स्यात्। यज्ञः। यत्नः॥ **याच्ञा स्त्रियाम्**॥ पूर्वस्यापवादः॥ **क्यन्तो घुः**॥ किप्रत्ययान्तो घुः पुंसि स्यात्। आधिः। निधिः। उदधिः। क्यन्तः किम्। दानम्। घुः किम्। जज्ञिर्बीजम्॥ **इषुधिः स्त्री च**॥ इषुधिशब्दः स्त्रियां पुंसि च॥ पूर्वस्यापवादः॥ **देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि**॥ एतानि पुंसि स्युः। देवाः सुराः। असुरा दैत्याः। आत्मा क्षेत्रज्ञः। स्वर्गो नाकः। गिरिः। पर्वतः। समुद्रोऽब्धिः। नखः कररुहः। केशः शिरोरुहः। दन्तो दशनः। स्तनः कुचः। भुजो दोः। कण्ठो गलः। खड्गः करवालः। शरो मार्गणः। पङ्कः कर्दम इत्यादि॥ **त्रिविष्टपत्रिभुवने नपुंसके**॥ स्पष्टम्। तृतीयं विष्टपं त्रिविष्टपम्। स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः॥ **द्यौः स्त्रियाम्**॥ शादियोगमन्त्रेणोपादानमिदम्॥ **इषुबाहू स्त्रियां च**॥ चात्पुंसि॥ **बाणकाण्डौ नपुंसके च**॥ चात्पुंसि। त्रिविष्टपेत्यादिचतुःसूत्री देवासुरेत्यस्यापवादः॥ **नान्तः**॥ अयं पुंसि। राजा। तक्षा। न च चर्मवर्मादिष्वतिव्याप्तिः। मनव्यच्कोकर्तरीति नपुंसकप्रकरणे वक्ष्यमाणत्वात्॥ **क्रतुपुरुषकपोलगुल्फमेघाभिधानानि**॥ क्रतुरध्वरः। पुरुषो नरः। कपोलो गण्डः। गुल्फः प्रपदः। मेघो नीरदः॥ **अभ्रं नपुंसकम्**॥ पूर्वस्यापवादः॥ **उकारान्तः**॥ अयं पुंसि स्यात्। प्रभुः इक्षुः। हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम्॥ द्वयोः कपोलावयव इति मेदिनी। करेणुरिभ्यां स्त्री नेभे इत्यमरः। एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः। उक्तं च। लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधित इति। एवमन्यत्रापि॥ **धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम्**॥ **समासे रज्जुः पुंसि च**।

कर्कटरज्ज्वा । कर्कटरज्जुना ॥ **श्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालूनि नपुंसके ॥ वसु चार्थवाचि ॥** अर्थवाचीति किम् । वसुर्मयूखाग्निधनाधिपेषु ॥ **मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ॥** चात्पुंसि । अयं मद्गुः । इदं मद्गु ॥ **रुत्वन्तः ॥** मेरुः । सेतुः ॥ **दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ॥** रुत्वन्त इति पुंस्त्वस्यापवादः । इदं दारु ॥ **सक्तुर्नपुंसके च ॥** चात्पुंसि । सक्तुः । सक्तु ॥ **प्राग्रश्मेरकारान्तः ॥** रश्मिदिवसाभिधानमिति वक्ष्यति प्रागेतस्मादकारान्त इत्यधिक्रियते ॥ **कोपधः ॥** कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ॥ **चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ॥** पूर्वसूत्रापवादः ॥ **कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ॥** चात्पुंसि । अयं कण्टकः । इदं कण्टकमित्यादि ॥ **टोपधः ।** टोपधोऽकारान्तः पुंसि स्यात् । घटः । पटः ॥ **किरीटमुकुटललाटवटवीटशृङ्गाटककराटलोष्टानि नपुंसके ॥** किरीटमित्यादि ॥ **कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ॥** चात्पुंसि । कुटः । कुटमित्यादि ॥ **णोपधः ॥** णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः ॥ **ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ॥** पूर्वसूत्रापवादः ॥ **कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ॥** चात्पुंसि ॥ **थोपधः ॥** रथः ॥ **काष्ठपृष्ठसिक्थोक्थानि नपुंसके ॥** इदं काष्ठमित्यादि ॥ **काष्ठा दिगर्था स्त्रियाम् ॥** इमाः काष्ठाः ॥ **तीर्थप्रोथयूथगाथानि नपुंसके च ॥** चात्पुंसि । अयं तीर्थः । इदं तीर्थम् ॥ **नोपधः ॥** अदन्तः । पुंसि । इनः । फेनः ॥ **जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके ॥** पूर्वस्यापवादः ॥ **मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि नपुंसके च ॥** चात्पुंसि । अयं मानः । इदं मानम् ॥ **पोपधः ॥** अदन्तः पुंसि । यूपः । दीपः । सर्पः ॥ **पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ॥** इदं पापमित्यादि ॥ **शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ॥** अयं शूर्पः इदं शूर्पमित्यादि ॥ **भोपधः ॥** स्तम्भः कुम्भः ॥ **तलभं नपुंसकम् ॥** पूर्वस्यापवादः ॥ **जृम्भं नपुंसके च ॥** जृम्भम् । जृम्भः ॥ **मोपधः ॥** सोमः । भीमः ॥ **रुक्मसिध्मयुग्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ॥** इदं रुक्ममित्यादि ॥ **संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ॥** चात्पुंसि । अयं संग्रामः । इदं संग्रामम् ॥ **योपधः ॥** समयः । हयः ॥ **किसलयहृद-**

येन्द्रियोत्तरीयाणि नपुंसके ॥ स्पष्टम् ॥ गोमयकषायमलयान्वयाव्ययानि नपुंसके च ॥ गोमयः । गोमयम् ॥ रोपधः ॥ क्षुरः । अङ्कुरः ॥ द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके ॥ इदं द्वारमित्यादि ॥ शुक्रमदेवतायाम् ॥ इदं शुक्रं रेतः ॥ चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिरशिशिराणि नपुंसके च ॥ चात्पुंसि । चक्रः । चक्रमित्यादि ॥ षोपधः ॥ वृषः वृक्षः ॥ शिरीषशीर्षाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ॥ यूषकरीषमिषविषवर्षाणि नपुंसके च ॥ चात्पुंसि । अयं यूषः । इदं यूषमित्यादि ॥ सोपधः ॥ वत्सः । वायसः । महानसः ॥ पनसबिसबुससाहसानि नपुंसके ॥ चमसांसरसनिर्यासोपवासकार्पासवासभासकासकांसमांसानि नपुंसके च ॥ इदं चमसम् । अयं चमस इत्यादि ॥ कंसं चाप्राणिनि ॥ कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो नाम कश्चिद्राजा ॥ रश्मिदिवसाभिधानानि ॥ एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ॥ दीधितिः स्त्रियाम् ॥ पूर्वस्यापवादः ॥ दिनाहनी नपुंसके ॥ अयमप्यपवादः ॥ मानाभिधानि ॥ एतानि पुंसि स्युः । कुडवः । प्रस्थः ॥ द्रोणाढकौ नपुंसके च ॥ इदं द्रोणम् । अयं द्रोणः ॥ खारीमानिके स्त्रियाम् ॥ इयं खारी । इयं मानिका ॥ दाराक्षतलाजासूनां बहुत्वं च ॥ इमे दाराः ॥ नाडयपजनोपपदानि व्रणाङ्गपदानि ॥ यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः ॥ अयं नाडीव्रणः । अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ॥ मरुद्गरुत्तरदृत्विजः ॥ अयं मरुत् ॥ ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ॥ एते पुंसि स्युः । अयमृषिः ॥ ध्वजगजमुञ्जपुञ्जाः ॥ एते पुंसि ॥ हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ॥ एते पुंसि । अमरस्तु मुहूर्तोऽस्त्रियामित्याह ॥ षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ॥ अयं षण्डः ॥ वंशांशपुरोडाशाः ॥ अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवख्याख्यानयोः प्रकरणे पौरोडाशपुरोडाशात्ष्ठन्निति विकारप्रकरणे व्रीहेः पुरोडाशः इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् । पुरोडाशभुजामिष्टमिति माघः ॥ ह्रदकन्दकुन्दबुद्बुदशब्दाः ॥ अयं ह्रदः ॥ अर्धपथिम-

**थ्पृशुक्षिस्तम्बनितम्बपूगाः** ॥ अयमर्वः ॥ **पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरंगगन्धस्कन्धमृदङ्गसङ्गसमुद्रपुङ्खाः** ॥ अयं पल्लव इत्यादि ॥ **सारथ्यतिथिकुक्षिवस्तिपाण्यञ्जलयः** ॥ एते पुंसि । अयं सारथिः ॥

॥ इति पुल्लिङ्गाधिकारः ॥

**नपुंसकम्** ॥ अधिकारोऽयम् ॥ **भावे ल्युडन्तः** ॥ हसनम् । भावे किम् । पचनोऽग्निः । इध्मव्रश्चनः कुठारः ॥ **निष्ठा च** ॥ भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् ॥ **त्वष्यञौ तद्धितौ** ॥ शुक्लत्वम् । शौक्ल्यम् । ष्यञः षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् । चातुरी । सामर्थ्यम् । सामग्री । औचित्यम् । औचिती । **कर्मणि च ब्राह्मणादिगुणवचनेभ्यः** ॥ ब्राह्मणस्य कर्म ब्राह्मण्यम् ॥ **यद्यढग्यगञण्वुञ्छाश्च भावकर्मणि** ॥ एतदन्तानि क्लीबानि ॥ स्तेनाद्यन्नलोपश्च । स्तेयम् । सख्युर्यः । सख्यम् । कपिज्ञात्योर्ढक् । कापेयम् । पत्यन्तपुरोहितादिभ्यो यक् । आधिपत्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । औष्ट्रम् । हायनान्तयुवादिभ्योऽण् । द्वैहायनम् । द्वन्द्वमनोज्ञादिभ्यो वुञ् । पितापुत्रकम् । होत्राभ्यश्छः । आच्छावाकीयम् ॥ **अव्ययीभावः** ॥ अधिस्त्रि ॥ **द्वन्द्वैकत्वम्** ॥ पाणिपादम् ॥ **अभाषायां हेमन्तशिशिरावहोरात्रे च** ॥ स्पष्टम् ॥ **अनञ्कर्मधारयस्तत्पुरुषः** ॥ अधिकारोऽयम् ॥ **अनल्पे छाया** ॥ शरच्छायम् ॥ **राजामनुष्यपूर्वा सभा** ॥ इनसभमित्यादि ॥ **सुरासेनाच्छायाशालानिशा स्त्रियां च** ॥ परवत् अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् ॥ **रात्राह्नाहाः पुंसि** ॥ **अपथपुण्याहे नपुंसके** ॥ **संख्यापूर्वा रात्रिः** ॥ त्रिरात्रम् । संख्यापूर्वेति किम् । सर्वरात्रः ॥ **द्विगुः स्त्रियां च** ॥ व्यवस्थया । पञ्चमूली । त्रिभुवनम् ॥ **इसुसन्तः** ॥ हविः । धनुः ॥ **अर्चिः स्त्रियां च** ॥ इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ॥ **छदिः स्त्रियामेव** ॥ इयं छदिः । छद्यतेऽनेनेति छादेश्चुगादिण्यन्तादर्चिशुचीत्यादिना इस् । इस्मन्त्रित्यादिना ह्रस्वः । पटलं छदिरित्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ॥ **मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि** ॥ एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनं । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या ॥ **सीरार्थौदनाः पुंसि** ॥ **वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च** ॥ वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ॥ **अटवी स्त्रियाम्** ॥ **लोपधः** ॥ कुलम् । कूलम् । स्थलम् ॥ **तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि** ॥ अयं तूलः ॥ **शीलमूलमङ्गलसाल-**

**कमलतलमुसलकुण्डलपललमृणालबालबालनिगलपलालविडालखिलशूलाः पुंसि च** ॥ नात क्लीबे । इद शीलमित्यादि ॥ **शतादिः संख्या** ॥ शतम् । सहस्रम । शतादिरिति किम । एको द्वौ बहवः । संख्येति किम् । शतशृङ्गो नाम पर्वतः ॥ **शतायुतप्रयुताः पुंसि च** ॥ अयं शतः । इदं शतमित्यादि ॥ **लक्षा कोटिः स्त्रियाम्** ॥ इयं लक्षा । इयं कोटिः । वा लक्षा नियुतं च तदित्यमरात् । क्लीबेऽपि लक्षम ॥ शङ्कुः पुंसि ॥ **सहस्रः क्वचित्** ॥ अयं सहस्रः । इदं सहस्रं ॥ **मनव्यचूकोऽकर्तरि** ॥ मन्प्रत्ययान्तो व्यचकः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म ॥ व्यचूकः किम् । अणिमा । महिमा । अकर्तरि किम् । ददाति इति मादा ॥ **ब्रह्मन् पुंसि च** ॥ अयं ब्रह्मा । इदं ब्रह्म ॥ **नामरोमणी नपुंसके** ॥ मनव्यचूक इत्यस्यायं प्रपञ्चः ॥ **असन्तो व्यचकः** ॥ यशः । मनः । तपः । व्यचूकः किम् । चन्द्रमाः । **अप्सराः स्त्रियाम्** ॥ एता अप्सरसः । प्रायेणायं बहुवचनान्तः ॥ **त्रान्तः** ॥ पत्रम् । छत्रम् ॥ **यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव । भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि** ॥ अयं भृत्रः । न मित्रममित्रः । तस्य मित्राण्यमित्रास्ते इति माघः । स्यातामामित्रौ मित्रे चेति च । यत्तु क्षिपोऽमित्र इति सूत्रे हरदत्तेनोक्तम् अमेर्द्विषदित्यौणादिक इत्रन् । अमेरमित्र मित्रस्य व्यथयेदित्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम । परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति तत्प्रकृतसूत्रापर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि नयो जरमरमित्रमृता इति षाष्ठसूत्रास्मरणमूलकमिति दिक् ॥ **पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च** ॥ **बलकुसुमशुल्बयुद्धपत्तनरणाभिधानानि** ॥ बल वीर्यम ॥ **पद्मकमलोत्पलानि पुंसि च** ॥ पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह ॥ वा पुंसि पद्मं नलिनमिति । एवं चार्धर्चादिसूत्रे तु जलजे पद्मं नपुंसकमेवेति वृत्तिग्रन्थो मतान्तरेण नेयः ॥ **आहवसंग्रामौ पुंसि** ॥ **आजिः स्त्रियामेव** ॥ **फलजातिः** ॥ फलजातिवाचीशब्दो नपुंसकं स्यात । आमलकम । आम्रम ॥ **वृक्षजाति स्त्रियामेव** ॥ क्वचिदेवेदम् । हरीतकी ॥ **वियज्जगत्सकृत्शकन्पृषत्शकृद्यकृदुदश्वितः** ॥ एते क्लीबाः स्युः ॥ **नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि** ॥ **श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि** ॥ एतानि क्लीबे स्युः ॥ **दैवं पुंसि च** ॥ दैवम । दैवः ॥ **धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि** ॥ इदं धान्यमित्यादि ॥ **द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि** ॥ **अक्षमिन्द्रिये** ॥ इन्द्रिये किम् मा भन ॥

॥ नपुंसकाधिकारः ॥

**स्त्रीपुंसयोः ॥** अधिकारोऽयम् ॥ **गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ॥** इयमयं वा गौः ॥ **मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ॥** इयमयं वा मृत्युः ॥ **गुणवचनमुकारान्तं नपुंसकं च ॥** त्रिलिङ्गमित्यर्थः॥ पटु । पटुः । पट्वी ॥ **अपत्यार्थतद्धिते ॥** औपगवः । औपगवी ॥

**॥ इति स्त्रीपुंसाधिकारः ॥**

**पुन्नपुंसकयोः ॥** अधिकारोऽयम् ॥ **घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ॥** अयं घृतः । इदं घृतम् ॥ **शृङ्गार्घनिदाघोद्यमशल्यदृढाः ॥** अयं शृङ्गः । इदं शृङ्गम् ॥ **व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः ॥** अयं व्रजः । इदं व्रजम् ॥ **कबन्धौषधायुधान्ताः ॥** स्पष्टम् ॥ **दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः ॥** एते पुन्नपुंसकयोः स्युः । कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च जनपदादिसूत्रेणायोविकारे ङीषि । कुशी । दारुणि तु टापा कुशा वानस्पत्याः स्थ ता मा यातेति श्रुतिः । अतः कृकमीति सूत्रे कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च । हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्द इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः ॥ **गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ॥**

**॥ इति पुन्नपुंसकाधिकारः ॥**

**अवशिष्टलिङ्गम् ॥ अव्ययं कतियुष्मदस्मदः ॥ ष्णान्तासंख्या ॥** शिष्टा परवत् ॥ एकः पुरुषः । एका स्त्री । एकं कुलम् ॥ **गुणवचनं च ॥** शुक्लः पटः । शुक्ला पटी । शुक्लं वस्त्रम ॥ **कृत्याश्च ॥** करणा ॥ **करणाधिकरणयोर्ल्युट् च ॥ सर्वादीनि सर्वनामानि ॥** स्पष्टार्थेयं त्रिसूत्री ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्धे पाणिनीयलिङ्गानुशासनसूत्रवृत्तिः समाप्ता ॥ ॥ श्रीरस्तु ॥



श्रीः ।

# शिक्षा ।

अथ शिक्षां प्रवक्ष्यामि पाणिनीयं मतं यथा । शास्त्रानुपूर्वं तद्विद्याद्यथोक्तं लोकवेदयोः ॥ १ ॥ प्रसिद्धमपि शब्दार्थमविज्ञातमबुद्धिभिः पुनर्व्यक्तीकरिष्यामि वाच उच्चारणे विधिम् ॥ २ ॥ त्रिषष्टिः चतुःषष्टिर्वा वर्णाः शम्भुमते मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥ ३ ॥ स्वरा विंशतिरेकश्च स्पर्शानां पञ्चविंशतिः । यादयश्च स्मृता ह्यष्टौ चत्वारश्च यमाः स्मृताः ॥ ४ ॥ अनुस्वारो विसर्गश्च ᳲ ᳳ चापि पराश्रितौ । दुःस्पृष्टश्चेति विज्ञेयो ऌकारः प्लुत एव च ॥ ५ । १ ॥ आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ ६ ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् । प्रातःसवनयोगं तं छन्दोगायत्रमाश्रितम् ॥ ७ ॥ कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम् । तारं तार्तीयसवनं शीर्षण्यं जागतानुगम् ॥ ८ ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ ९ ॥ स्वरतः कालतः स्थानात्प्रयत्नानुप्रदानतः । इति वर्णविदः प्राहुर्निपुणं तन्निबोधत ॥ १० । २ ॥ उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि ॥ ११ ॥ उदात्ते निषादगान्धारावनुदात्त ऋषभधैवतौ । स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥ १२ ॥ अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा । जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥ १३ ॥ ओभावश्च विवृत्तिश्च शषसा रेफ एव च । जिह्वामूलमुपध्मा च गतिरष्टविधोष्मणः ॥ १४ ॥ यद्योभावप्रसन्धानमुकारादिपरं पदम् । स्वरान्तं तादृशं विद्याद्यदन्यद्व्यक्तमूष्मणः ॥ १५ । ३ ॥ हकारं पञ्चमैर्युक्तमन्तःस्थाभिश्च संयुतम् । औरस्यं तं विजानीयात्कण्ठ्यमाहुरसंयुतम् ॥ १६ ॥ कण्ठ्यावहाविचुयशास्तालव्या ओष्ठजावुपू । स्युर्मूर्धन्या ऋटुरषा दन्त्या ऌतुलसाः स्मृताः ॥ १७ ॥ जिह्वामूले तु कुः प्रोक्तो दन्त्योष्ठ्यो वः स्मृतो बुधैः । एऐ तु कण्ठतालव्या ओऔ कण्ठोष्ठजौ स्मृतौ ॥ १८ ॥ अर्धमात्रा तु कण्ठ्या स्यादेकारैकारयोर्भवेत् । ओकारौकारयोर्मात्रा तयोर्विवृतसंवृतम् ॥ १९ ॥ संवृतं मात्रिकं ज्ञेयं विवृतं तु द्विमात्रिकम् । घोषा वा संवृताः सर्वे अघोषा विवृताः स्मृताः ॥ २० । ४ ॥ स्वराणामूष्मणां चैव विवृतं करणं स्मृतम् । तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च ॥ २१ ॥ अनुस्वारयमानां च नासिका स्थानमुच्यते । अयोगवाहा विज्ञेया आश्रयस्थानभागिनः ॥ २२ ॥ अलाबुवीणानिर्घोषो दन्त्यमूल्यस्वरानुगः । अनुस्वारस्तु कर्तव्यो नित्यं ह्रोः शषसेषु च ॥ २३ ॥ अनुस्वारे विवृत्त्यां तु विरामे चाक्षरद्वये । द्विरोष्ठ्यौ तु विगृह्णीयाद्यत्रौकारवकारयोः ॥ २४ ॥ व्याघ्री यथा हरेत्पुत्रान्दंष्ट्राभ्यां न च पीडयेत् । भीता पतनभेदाभ्यां तद्वद्वर्णान्प्रयोजयेत् ॥ २५ । ५ ॥ यथा सौराष्ट्रिका नारी तक्रँ इत्यभिभाषते । एवं रङ्गाः प्रयोक्तव्याः खे अराँ इव खेदया ॥ २६ ॥ रङ्गवर्णं प्रयुञ्जीरन्नो ग्रसेत्पूर्वमक्षरम् । दीर्घस्वरं प्रयुञ्जीयात्पश्चान्नासिक्यमाचरेत् ॥ २७ ॥ हृदये चैकमात्रस्त्वर्धमात्रस्तु मूर्धनि । नासिकायां तथार्धं च रङ्गस्यैवं द्विमात्रता ॥ २८ ॥ हृदयादुत्करे तिष्ठन्कांस्येन समनुस्वरन् । मार्दवं च द्विमात्रं च जघन्वाँ इति निदर्शनम् ॥ २९ ॥ मध्ये तु कम्पयेत्कम्पमुभौ पार्श्वौ समौ भवेत् । सरङ्गं कम्पयेत्कम्पं रथीवेति निदर्शनम् ॥ ३० ॥ एवं वर्णाः प्रयोक्तव्या नाव्यक्ता न च [illegible] । सम्यग्वर्णप्रयोगेण ब्रह्मलोके महीयते ॥ ३१ । ६ ॥ गीती शीघ्री

शिर'कम्पी तथा लिखितपाठक । अनर्थज्ञोऽल्पकण्ठश्च पडेते पाठकाधमा' ॥ ३२ ॥ माधुर्य-मक्षरव्यक्तिः पदच्छेदस्तु सुस्वर । धैर्य लयसमर्थ च पडेते पाठका गुणा ॥ ३३ ॥ शङ्कित भीतमुद्घृष्टमव्यक्तमनुनासिकम् । काकस्वर शिरसि गत तथा स्थानविवर्जितम् ॥ ३४ ॥ उपांशु दष्ट त्वरित निरस्त विलम्बित गद्गदित प्रगीतम् । निष्पीडित ग्रस्तपदाक्षर च वदेन्न दीन न तु सानुनास्यम् ॥ ३५ ॥ प्रात पठेन्नित्यमुर स्थितेन स्वरेण शार्दूलरुतोपमेन । मध्यंदिने कण्ठगतेन चैव चक्राह्वसकूजितसन्निभेन ॥ ३६ ॥ तार तु विद्यात्सवन तृतीय शिरोगत तच्च सदाप्रयोज्यम् । मयूरहसान्यभृतस्वराणा तुल्येन नादेन शिर स्थितेन ॥ ३७ ॥ अचोऽस्पृष्टा यणस्त्वीषन्नेमिस्पृष्टाः शर स्मृता' । शेषा स्पृष्टा हल प्रोक्ता निबोधानुप्रदानत ॥ ३८ ॥ यमोऽनुनासिका न ह्रौ नादिनो हझष स्मृता. । ईषन्नादा यणो जश्च श्वासिनस्तु खफादय. ॥ ३९ ॥ ईषच्छ्वासाश्चरो विद्याद्गोर्धामैतत्प्रचक्षते । दाक्षीपुत्र पाणिनिना येनेद व्यापित भुवि ॥ ४० ॥ छन्द. पादौ तु वेदस्य हस्तौ कल्पोथ पठ्यते । ज्योतिषामयन चक्षुर्निरुक्त श्रोत्रमुच्यते ॥ ४१ ॥ शिक्षा घ्राण तु वेदस्य मुख व्याकरण स्मृतम् । तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥ ४२ ॥ उदात्तमाख्याति वृषोङ्गुलीना प्रदेशिनी मूलनिविष्टमूर्धा । उपान्तमध्ये स्वरित धृत च कनिष्ठिकायामनुदात्तमेव ॥ ४३ ॥ उदात्त प्रदेशिनी विद्यात्प्रचय मध्यतोङ्गुलिम् । निहत तु कनिष्ठिक्या स्वरितोपकनिष्ठिकाम् ॥ ४४ ॥ अन्तोदात्तमाद्युदात्तमुदात्तमनुदात्त नीचस्वरितम् । मध्योदात्त स्वरित द्व्युदात्त त्र्युदात्तमिति नवपदशय्या ॥ ४५ ॥ अग्नि सोम' प्रवो वीर्य हविषा स्वर्बृहस्पतिरिन्द्राबृहस्पती । अग्निरित्यन्तोदात्त सोम इत्याद्युदात्त प्रेत्युदात्त व इत्यनुदात्त वीर्य नीचस्वरितम् ॥ ४६ ॥ हविषा मध्योदात्त स्वरिति स्वरितम् । बृहस्पतिरिति द्व्युदात्तमिन्द्राबृहस्पती इति त्र्युदात्तम् ॥ ४७ ॥ अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीय सर्वास्ये प्रचयः स्मृत. ॥ ४८।९ ॥ चाषस्तु वदते मात्रा द्विमात्र त्वेव वायसः । शिखी रौति त्रिमात्रं तु नकुलस्त्वर्धमात्रकम् ॥ ४९ ॥ कुतीर्थादागत दग्धमपवर्ण च भक्षितम् । न तस्य पाठे मोक्षोस्ति पापाहेरिव किल्बिषात् ॥ ५० ॥ सुतीर्थादागत्त व्यक्त स्वाम्नाय सुव्यवस्थितम् । सुस्वरेण सुवक्त्रेण प्रयुक्त ब्रह्म राजते ॥ ५१ ॥ मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमान हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ ५२ ॥ अवक्षर हनायुष्य विस्वर व्याधिपीडितम् । अक्षता शस्त्ररूपेण वज्र पतति मस्तके ॥ ५३ ॥ हस्तहीन तु योधीते स्वरवर्णविवर्जितम् । ऋग्यजु'सामभिर्दग्धो वियोनिमधिगच्छति ॥ ५४ ॥ हस्तेन वेद योधीते स्वरवर्णार्थसयुतम् । ऋग्यजुःसामभि पूतो ब्रह्मलोके महीयते ॥ ५५ । १० ॥ शकर. शाकरी प्रादाद्दाक्षीपुत्राय धीमते । वाङ्मयेभ्यः समाहृत्य देवी वाचमिति स्थिति' ॥ ५६ ॥ येनाक्षरसमाम्नायमधिगम्य महेश्वरात् । कृत्स्न व्याकरण प्रोक्त तस्मै पाणिनये नम' ॥ ५७ ॥ अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलित येन तस्मै पाणिनये नम. ॥ ५८ ॥ त्रिनयनमभिमुखनिःसृतामिमा य इह पठेत्प्रयतश्च सदा द्विजः । स भवति धनधान्यपशुपुत्रकीर्तिमानतुल च सुख समश्नुते दिवीति दिवीति ॥ ५९ । ११ ॥ अथ शिक्षामात्मोदात्तश्च हकार स्वराणा यथागीत्यचोस्पृष्टोदात्त चाषस्तु शकर एकादश ॥

## इति शिक्षा ।

॥ श्रीः ॥

# अष्टाध्यायीसूत्रपाठः ।

येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥
येन धौता गिरः पुंसां विमलैः शब्दवारिभिः
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥

अइउण् । ऋऌक् । एओङ् । ऐऔच् । हयवरट् । लण् । ञमङणनम् । झभञ् । घढधष् । जबगडदश् । खफछठथचटतव् । कपय् । शषसर् । हल् ॥ इति प्रत्याहारसूत्राणि ॥

## प्रथमोऽध्यायः ।

### प्रथमः पादः ।

वृद्धिरादैच् १ । १ । १ ॥ अदेङ्गुणः १ । १ । २ ॥ इको गुणवृद्धी १ । १ । ३ ॥ न धातुलोप आर्धधातुके १ । १ । ४ ॥ क्ङिति च १ । १ । ५ ॥ दीधीवेवीटाम् १ । १ । ६ ॥ हलोऽनन्तराः संयोगः १ । १ । ७ ॥ मुखनासिकावचनोऽनुनासिकः १ । १ । ८ ॥ तुल्यास्यप्रयत्नं सवर्णम् १ । १ । ९ ॥ नाज्झलौ १ । १ । १० ॥ ईदूदेद्द्विवचनं प्रगृह्यम् १ । १ । ११ ॥ अदसो मात् १ । १ । १२ ॥ शे १ । १ । १३ ॥ निपात एकाजनाङ् १ । १ । १४ ॥ ओत् १ । १ । १५ ॥ सम्बुद्धौ शाकल्यस्येतावनार्षे १ । १ । १६ ॥ उञः १ । १ । १७ ॥ ऊँ १ । १ । १८ ॥ ईदूतौ च सप्तम्यर्थे १ । १ । १९ ॥ दाधा घ्वदाप् १ । १ । २० ॥ १ ॥ आद्यन्तवदेकस्मिन् १ । १ । २१ ॥ तरप्तमपौ घः १ । १ । २२ ॥ बहुगणवतुडति संख्या १ । १ । २३ ॥ ष्णान्ता षट् १ । १ । २४ ॥ डति च १ । १ । २५ ॥ क्तक्तवतू निष्ठा १ । १ । २६ ॥ सर्वादीनि सर्वनामानि १ । १ । २७ ॥ विभाषा दिक्समासे बहुव्रीहौ १ । १ । २८ ॥ न बहुव्रीहौ १ । १ । २९ ॥ तृतीयासमासे १ । १ । ३० ॥ द्वन्द्वे च १ । १ । ३१ ॥ विभाषा जसि १ । १ । ३२ ॥ प्रथमचरमतयाल्पार्धकतिपयनेमाश्च १ । १ । ३३ ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् १ । १ । ३४ ॥ स्वमज्ञातिधनाख्यायाम् १ । १ । ३५ ॥ अन्तरं बहिर्योगोपसंव्यानयोः १ । १ । ३६ ॥ स्वरादिनिपातमव्ययम् १ । १ । ३७ ॥ तद्धितश्चासर्व-

विभक्ति. १ । १ । ३८ ॥ क्तन्मेजन्तः १ । १ । ३९ ॥ क्त्वातोसुन्कसुनः १ । १ । ४० ॥ २ ॥ अव्ययीभावश्च १ । १ । ४१ ॥ शि सर्वनामस्थानम् १ । १ । ४२ ॥ सुडनपुंसकस्य १ । १ । ४३॥ नवेति विभाषा १।१।४४ ॥ इग्यणः सम्प्रसारणम् १।१।४५॥ आद्यन्तौ टकितौ १ । १ । ४६ ॥ मिदचोऽन्त्यात्परः १।१।४७॥ एच इग्घ्रस्वादेशे १ । १ । ४८ ॥ षष्ठी स्थानेयोगा १ । १ । ४९ ॥ स्थानेऽन्तरतमः । १ । १ । ५० ॥ उरण्रपरः १ । १ । ५१ ॥ अलोऽन्त्यस्य १ । १ । ५२ ॥ ङिच्च १ । १ । ५३ ॥ आदेः परस्य १ । १ । ५४ ॥ अनेकाल्शित्सर्वस्य १ । १ । ५५ ॥ स्थानिवदादेशोऽनल्विधौ १ । १ । ५६ ॥ अचः परस्मिन्पूर्वविधौ १ । १ । ५७ ॥ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु १ । १ । ५८ ॥ द्विर्वचनेऽचि १ । १ । ५९ ॥ अदर्शनं लोपः १ । १ । ६० ॥ ३ ॥ प्रत्ययस्य लुक्श्लुलुपः १ । १ । ६१ ॥ प्रत्ययलोपे प्रत्ययलक्षणम् १ । १ । ६२ ॥ न लुमताङ्गस्य १ । १ । ६३ ॥ अचोऽन्त्यादि टि १ । १ । ६४ ॥ अलोऽन्त्यात्पूर्व उपधा १ । १ । ६५ ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य १ । १ । ६६ ॥ तस्मादित्युत्तरस्य । १ । १ । ६७ ॥ स्वरूप शब्दस्याशब्दसञ्ज्ञा १ । १ । ६८ ॥ अणुदित्सवर्णस्य चाप्रत्ययः१।१।६९॥ तपरस्तत्कालस्य १।१।७०॥ आदिरन्त्येन सहेता १ । १ । ७१ ॥ येन विधिस्तदन्तस्य १ । १ । ७२ ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् १ । १ । ७३ ॥ त्यदादीनि च १ । १ । ७४ ॥ एङ्प्राचां देशे १ । १ । ७५ ॥ "वृद्धिराद्यन्तवदव्ययीभावः प्रत्ययस्य लुक्पञ्चदश" ॥

## द्वितीयः पादः ।

गाङ्कुटादिभ्योऽञ्णिन्ङित् १ । २ । १ ॥ विज इट् १ । २ । २ ॥ विभाषोर्णो १ । २ । ३ ॥ सार्वधातुकमपित् १ । २ । ४ ॥ असंयोगाल्लिट्कित् १ । २ । ५ ॥ इन्धिभवतिभ्यां च १ । २ । ६ ॥ मृडमृदगुधकुषक्लिशवदवसः क्त्वा १ । २ । ७ ॥ रुदविदमुषग्रहिस्वपिप्रच्छः सश्च १ । २ । ८ ॥ इको झल् १ । २ । ९ ॥ हलन्ताच्च १ । २ । १० ॥ लिङ्सिचावात्मनेपदेषु १ । २ । ११ ॥ उश्च १ । २ । १२ ॥ वा गमः १ । २ । १३ ॥ हनः सिच् १ । २ । १४ ॥ यमो गन्धने १ । २ । १५ ॥ विभाषोपयमने १ । २ । १६ ॥ स्थाघ्वोरिच्च १ । २ । १७ ॥ न क्त्वा सेट् १ । २ । १८ ॥ निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः १ । २ । १९ ॥ मृषस्तितिक्षायाम् १ । २ । २० ॥ १ ॥ उदुपधाद्भावादिकर्मणोरन्यतरस्याम् १ । २ । २१ ॥ पूङः क्त्वा च १ । २ । २२ ॥ नोपधात्थफान्ताद्वा १ । २ । २३ ॥ वञ्चिलुञ्च्यृतश्च १ । २ । २४ ॥ तृषिमृषिकृशेः काश्यपस्य १ । २ । २५ ॥ रलो व्युपधाद्धलादेः सश्च १ । २ । २६ ॥ ऊकालोऽज्झ्रस्वदीर्घप्लुतः १ । २ । २७ ॥ अचश्च १ । २ । २८ ॥ उच्चैरुदात्तः १ । २ । २९ ॥ नीचैरनुदात्त. १ । २ । ३० ॥ समाहारः स्वरितः १ । २ । ३१ ॥ तस्यादित उदात्तमर्धह्रस्वम् १ । २ । ३२ ॥ एक-

श्रुति दूरात्संबुद्धौ १ । २ । ३३ ॥ यज्ञकर्मण्यजपन्यूङ्खसामसु १ । २ । ३४ ॥ उच्चैस्तरां वा वषट्कारः १ । २ । ३५ ॥ विभाषा छन्दसि १ । २ । ३६ ॥ न सुब्रह्मण्यायां स्वरितस्य तूदात्तः १ । २ । ३७ ॥ देवब्रह्मणोरनुदात्तः १ । २ । ३८ ॥ स्वरितात्संहितायामनुदात्तानाम् १ । २ । ३९ ॥ उदात्तस्वरितपरस्य सन्नतरः १ । २ । ४० ॥ २ ॥ अपृक्त एकाल्प्रत्ययः १ । २ । ४१ ॥ तत्पुरुषः समानाधिकरणः कर्मधारयः १ । २ । ४२ ॥ प्रथमानिर्दिष्टं समास उपसर्जनम् १ । २ । ४३ ॥ एकविभक्ति चापूर्वनिपाते १ । २ । ४४ ॥ अर्थवदधातुरप्रत्ययः प्रातिपदिकम् १ । २ । ४५ ॥ कृत्तद्धितसमासाश्च १ । २ । ४६ ॥ ह्रस्वो नपुंसके प्रातिपदिकस्य १ । २ । ४७ ॥ गोस्त्रियोरुपसर्जनस्य १ । २ । ४८ ॥ लुक्तद्धितलुकि १ । २ । ४९ ॥ इद्गोण्याः १ । २ । ५० ॥ लुपि युक्तवद्व्यक्तिवचने १ । २ । ५१ ॥ विशेषणानां चाजातेः १ । २ । ५२ ॥ तदशिष्यं संज्ञाप्रमाणत्वात् १ । २ । ५३ ॥ लुब्योगाप्रख्यानात् १ । २ । ५४ ॥ योगप्रमाणे च तदभावेऽदर्शनं स्यात् १ । २ । ५५ ॥ प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात् १ । २ । ५६ ॥ कालोपसर्जने च तुल्यम् १ । २ । ५७ ॥ जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम् १ । २ । ५८ ॥ अस्मदो द्वयोश्च १ । २ । ५९ ॥ फल्गुनीप्रोष्ठपदानां च नक्षत्रे १ । २ । ६० ॥ ३ ॥ छन्दसि पुनर्वस्वोरेकवचनम् १ । २ । ६१ ॥ विशाखयोश्च १ । २ । ६२ ॥ तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे बहुवचनस्य द्विवचनं नित्यम् १ । २ । ६३ ॥ सरूपाणामेकशेष एकविभक्तौ १ । २ । ६४ ॥ वृद्धो यूना तल्लक्षणश्चेदेव विशेषः १ । २ । ६५ ॥ स्त्री पुंवच्च १ । २ । ६६ ॥ पुमान्स्त्रिया १ । २ । ६७ ॥ भ्रातृपुत्रौ स्वसृदुहितृभ्याम् १ । २ । ६८ ॥ नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् १ । २ । ६९ ॥ पिता मात्रा १ । २ । ७० ॥ श्वशुरः श्वश्र्वा १ । २ । ७१ ॥ त्यदादीनि सर्वैर्नित्यम् १ । २ । ७२ ॥ ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री १ । २ । ७३ ॥ "गाङ्कुटादिवृद्धिरादेच्छन्दसि पुनर्वस्वोस्त्रयोदश" ॥

## तृतीयः पादः ।

भूवादयो धातवः १ । ३ । १ ॥ उपदेशेऽजनुनासिक इत् १ । ३ । २ ॥ हलन्त्यम् १ । ३ । ३ ॥ न विभक्तौ तुस्माः १ । ३ । ४ ॥ आदिर्ञिटुडवः १ । ३ । ५ ॥ षः प्रत्ययस्य १ । ३ । ६ ॥ चुटू १ । ३ । ७ ॥ लशक्वतद्धिते १ । ३ । ८ ॥ तस्य लोपः १ । ३ । ९ ॥ यथासंख्यमनुदेशः समानाम् १ । ३ । १० ॥ स्वरितेनाधिकारः १ । ३ । ११ ॥ अनुदात्तङित आत्मनेपदम् १ । ३ । १२ ॥ भावकर्मणोः १ । ३ । १३ ॥ कर्तरि कर्मव्यतिहारे १ । ३ । १४ ॥ न गतिहिंसार्थेभ्यः १ । ३ । १५ ॥ इतरेतरान्योन्योपपदाच्च १ । ३ । १६ ॥ नेर्विशः १ । ३ । १७ ॥ परिव्यवेभ्यः क्रियः १ । ३ । १८ ॥ विपराभ्यां जेः १ । ३ । १९ ॥ आङो दोऽनास्यविहरणे १ । ३ । २० ॥ १ ॥ क्रीडोऽनुसम्परिभ्यश्च १ । ३ । २१ ॥ समवप्रविभ्यः स्थः १ । ३ । २२ ॥

१ । ३ । २३ ॥ उदोऽनूर्ध्वकर्मणि १ । ३ । २४ ॥ उपान्मन्त्रकरणे १ । ३ । २५ ॥ अकर्मकाच्च १ । ३ । २६ ॥ उद्विभ्यां तपः १ । ३ । २७ ॥ आङो यमहनः १ । ३ । २८ ॥ समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः १ । ३ । २९ ॥ निसमुपविभ्यो ह्वः १ । ३ । ३० ॥ स्पर्धायामाङः १ । ३ । ३१ ॥ गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः १ । ३ । ३२ ॥ अधेः प्रसहने १ । ३ । ३३ ॥ वेः शब्दकर्मणः १ । ३ । ३४ ॥ अकर्मकाच्च १ । ३ । ३५ ॥ संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः १ । ३ । ३६ ॥ कर्तृस्थे चाशरीरे कर्मणि १ । ३ । ३७ ॥ वृत्तिसर्गतायनेषु क्रमः १ । ३ । ३८ ॥ उपपराभ्याम् १ । ३ । ३९ ॥ आङ उद्गमने १ । ३ । ४० ॥ २ ॥ वेः पादविहरणे १ । ३ । ४१ ॥ प्रोपाभ्यां समर्थाभ्याम् १ । ३ । ४२ ॥ अनुपसर्गाद्वा १ । ३ । ४३ ॥ अपह्नवे ज्ञः १ । ३ । ४४ ॥ अकर्मकाच्च १ । ३ । ४५ ॥ संप्रतिभ्यामनाध्याने १ । ३ । ४६ ॥ भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः १ । ३ । ४७ ॥ व्यक्तवाचां समुच्चारणे १ । ३ । ४८ ॥ अनोरकर्मकात् १ । ३ । ४९ ॥ विभाषा विप्रलापे १ । ३ । ५० ॥ अवाद्ग्रः १ । ३ । ५१ ॥ समः प्रतिज्ञाने १।३।५२॥ उदश्चरः सकर्मकात् १ । ३ । ५३ ॥ समस्तृतीयायुक्तात् १ । ३ । ५४ ॥ दाणश्च सा चेच्चतुर्थ्यर्थे १ । ३ । ५५ ॥ उपाद्यमः स्वकरणे १ । ३ । ५६ ॥ ज्ञाश्रुस्मृदृशां सनः १ । ३ । ५७ ॥ नानोर्ज्ञः १ । ३ । ५८ ॥ प्रत्याङ्भ्यां श्रुवः १ । ३ । ५९ ॥ शदेः शितः १ । ३ । ६० ॥ ३ ॥ म्रियतेर्लुङ्लिङोश्च १ । ३ । ६१ ॥ पूर्ववत्सनः १ । ३ । ६२ ॥ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य १ । ३ । ६३ ॥ प्रोपाभ्यां युजेरयज्ञपात्रेषु १ । ३ । ६४ ॥ समः क्ष्णुवः १ । ३ । ६५ ॥ भुजोऽनवने १ । ३ । ६६ ॥ णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने १ । ३ । ६७ ॥ भीस्म्योर्हेतुभये १ । ३ । ६८ ॥ गृधिवञ्च्योः प्रलम्भने १ । ३ । ६९ ॥ लियः संमाननशालीनीकरणयोश्च १ । ३ । ७० ॥ मिथ्योपपदात्कृञोऽभ्यासे १ । ३ । ७१ ॥ स्वरितञितः कर्त्रभिप्राये क्रियाफले १ । ३ । ७२ ॥ अपाद्वदः १ । ३ । ७३ ॥ णिचश्च १ । ३ । ७४ ॥ समुदाङ्भ्यो यमोऽग्रन्थे १ । ३ । ७५ ॥ अनुपसर्गाज्ज्ञः १ । ३ । ७६ ॥ विभाषोपपदेन प्रतीयमाने १ । ३ । ७७ ॥ शेषात्कर्तरि परस्मैपदम् १ । ३ । ७८ ॥ अनुपराभ्यां कृञः १ । ३ । ७९ ॥ अभिप्रत्यतिभ्यः क्षिपः १ । ३ । ८० ॥ ४ ॥ प्राद्वहः १ । ३ । ८१ ॥ परेर्मृषः १ । ३ । ८२ ॥ व्याङ्परिभ्यो रमः १ । ३ । ८३ ॥ उपाच्च १ । ३ । ८४ ॥ विभाषाकर्मकात् १ । ३ । ८५ ॥ बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः १ । ३ । ८६ ॥ निगरणचलनार्थेभ्यश्च १ । ३ । ८७ ॥ अणावकर्मकाच्चित्तवत्कर्तृकात् १ । ३ । ८८ ॥ न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः १ । ३ । ८९ ॥ वा क्यषः १ । ३ । ९० ॥ द्युद्भ्यो लुङि १ । ३ । ९१ ॥ वृद्भ्यः

स्तनोः १ । ३ । ९२ ॥ लुटि च क्लृपः १ । ३ । ९३ । "भूवादयः क्रीडोऽनु वेः पादम्रियतेः प्राद्वहस्त्रयोदश" ॥

## चतुर्थः पादः ।

आ कडारादेका संज्ञा १ । ४ । १ ॥ विप्रतिषेधे परं कार्यम् १ । ४ । २ ॥ यू स्त्र्याख्यौ नदी १ । ४ । ३ ॥ नेयङुवङ्स्थानावस्त्री १ । ४ । ४ ॥ वामि १ । ४ । ५ ॥ ङिति ह्रस्वश्च १ । ४ । ६ ॥ शेषो घ्यसखि १ । ४ । ७ ॥ पतिः समास एव १ । ४ । ८ ॥ षष्ठीयुक्तश्छन्दसि वा १ । ४ । ९ ॥ ह्रस्वं लघु १ । ४ । १० ॥ संयोगे गुरु १ । ४ । ११ ॥ दीर्घं च १ । ४ । १२ ॥ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम् १ । ४ । १३ ॥ सुप्तिङन्तं पदम् । १ । ४ । १४ ॥ नः क्ये १ । ४ । १५ ॥ सिति च १ । ४ । १६ ॥ स्वादिष्वसर्वनामस्थाने १ । ४ । १७ ॥ यचि भम् १ । ४ । १८ ॥ तसौ मत्वर्थे १ । ४ । १९ ॥ अयस्मयादीनि छन्दसि १ । ४ । २० ॥ १ ॥ बहुषु बहुवचनम् १ । ४ । २१ ॥ द्व्येकयोर्द्विवचनैकवचने १ । ४ । २२ ॥ कारके १ । ४ । २३ ॥ ध्रुवमपायेऽपादानम् १ । ४ । २४ ॥ भीत्रार्थानां भयहेतुः १ । ४ । २५ ॥ पराजेरसोढः १ । ४ । २६ ॥ वारणार्थानामीप्सितः १ । ४ । २७ ॥ अन्तर्धौ येनादर्शनमिच्छति १ । ४ । २८ ॥ आख्यातोपयोगे १ । ४ । २९ ॥ जनिकर्तुः प्रकृतिः १ । ४ । ३० ॥ भुवः प्रभवः १ । ४ । ३१ ॥ कर्मणा यमभिप्रैति स सम्प्रदानम् १ । ४ । ३२ ॥ रुच्यर्थानां प्रीयमाणः १ । ४ । ३३ ॥ श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः १ । ४ । ३४ ॥ धारेरुत्तमर्णः १ । ४ । ३५ ॥ स्पृहेरीप्सितः १ । ४ । ३६ ॥ क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः १ । ४ । ३७ ॥ क्रुधद्रुहोरुपसृष्टयोः कर्म १ । ४ । ३८ ॥ राधीक्ष्योर्यस्य विप्रश्नः १ । ४ । ३९ ॥ प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता १ । ४ । ४० ॥ २ ॥ अनुप्रतिगृणश्च १ । ४ । ४१ ॥ साधकतमं करणम् १ । ४ । ४२ ॥ दिवः कर्म च १ । ४ । ४३ ॥ परिक्रयणे सम्प्रदानमन्यतरस्याम् १ । ४ । ४४ ॥ आधारोऽधिकरणम् १ । ४ । ४५ ॥ अधिशीङ्स्थासां कर्म १ । ४ । ४६ ॥ अभिनिविशश्च १ । ४ । ४७ ॥ उपान्वध्याङ्वसः १ । ४ । ४८ ॥ कर्तुरीप्सिततमं कर्म १ । ४ । ४९ ॥ तथायुक्तं चानीप्सितम् १ । ४ । ५० ॥ अकथितं च १ । ४ । ५१ ॥ गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ १ । ४ । ५२ ॥ हृक्रोरन्यतरस्याम् १ । ४ । ५३ ॥ स्वतन्त्रः कर्ता १ । ४ । ५४ ॥ तत्प्रयोजको हेतुश्च १ । ४ । ५५ ॥ प्राग्रीश्वरान्निपाताः । १ । ४ । ५६ ॥ चादयोऽसत्त्वे १ । ४ । ५७ ॥ प्रादयः १ । ४ । ५८ ॥ उपसर्गाः क्रियायोगे १ । ४ । ५९ ॥ गतिश्च १ । ४ । ६० ॥ ३ ॥ ऊर्यादिच्विडाचश्च १ । ४ । ६१ ॥ अनुकरणं चानितिपरम् १ । ४ । ६२ ॥ आदरानादरयोः सदसती १ । ४ । ६३ ॥ भूषणेऽलम् १ । ४ । ६४ ॥

अन्तरपरिग्रहे १ । ४ । ६५ ॥ कणेमनसी श्रद्धाप्रतीघाते १ । ४ । ६६ ॥ पुरोऽव्ययम् १ । ४ । ६७ ॥ अस्तं च १ । ४ । ६८ ॥ अच्छ गत्यर्थवदेषु १ । ४ । ६९ ॥ अदोऽनुपदेशे १ । ४ । ७० ॥ तिरोऽन्तर्धौ १ । ४ । ७१ ॥ विभाषा कृञि १ । ४ । ७२ ॥ उपाजेऽन्वाजे १ । ४ । ७३ ॥ साक्षात्प्रभृतीनि च १ । ४ । ७४ ॥ अनत्याधान उरसिमनसी । १ । ४ । ७५ ॥ मध्ये पदे निवचने च १ । ४ । ७६ ॥ नित्यं हस्ते पाणावुपयमने १ । ४ । ७७ ॥ प्राध्वं बन्धने १ । ४ । ७८ ॥ जीविकोपनिषदावौपम्ये १ । ४ । ७९ ॥ ते प्राग्धातोः १ । ४ । ८० ॥ ४ ॥ छन्दसि परेऽपि १ । ४ । ८१ ॥ व्यवहिताश्च १ । ४ । ८२ ॥ कर्मप्रवचनीयाः १ । ४ । ८३ ॥ अनुर्लक्षणे १ । ४ । ८४ ॥ तृतीयार्थे १ । ४ । ८५ ॥ हीने १ । ४ । ८६ ॥ उपोऽधिके च १ । ४ । ८७ ॥ अपपरी वर्जने १ । ४ । ८८ ॥ आङ्मर्यादावचने १ । ४ । ८९ ॥ लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः १ । ४ । ९० ॥ अभिरभागे १ । ४ । ९१ ॥ प्रतिः प्रतिनिधिप्रतिदानयोः १ । ४ । ९२ ॥ अधिपरी अनर्थकौ १ । ४ । ९३ ॥ सुः पूजायाम् १ । ४ । ९४ ॥ अतिरतिक्रमणे च १ । ४ । ९५ ॥ अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु १ । ४ । ९६ ॥ अधिरीश्वरे १ । ४ । ९७ ॥ विभाषा कृञि १ । ४ । ९८ ॥ लः परस्मैपदम् १ । ४ । ९९ ॥ तङानावात्मनेपदम् १ । ४ । १०० ॥ ५ ॥ तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः १ । ४ । १०१ ॥ तान्येकवचनद्विवचनबहुवचनान्येकशः १ । ४ । १०२ ॥ सुपः १ । ४ । १०३ ॥ विभक्तिश्च १ । ४ । १०४ ॥ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः १ । ४ । १०५ ॥ प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च १ । ४ । १०६ ॥ अस्मद्युत्तमः १ । ४ । १०७ ॥ शेषे प्रथमः १ । ४ । १०८ ॥ परः संनिकर्षः संहिता १ । ४ । १०९ ॥ विरामोऽवसानम् १ । ४ । ११० ॥ "आकडारादेका संज्ञा" ... 

# इति प्रथमोऽध्यायः ।

# द्वितीयोऽध्यायः ।

## प्रथमः पादः ।

समर्थः पदविधिः २ । १ । १ ॥ सुबामन्त्रिते पराङ्गवत्स्वरे २ । १ । २ ॥ प्राक्कडारात्समासः २ । १ । ३ ॥ सह सुपा २ । १ । ४ ॥ अव्ययीभावः २ । १ । ५ ॥ अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु २ । १ । ६ ॥ यथासादृश्ये २ । १ । ७ ॥ यावदवधारणे २ । १ । ८ ॥ सुप्प्रतिना मात्रार्थे २ । १ । ९ ॥ अक्षशलाकासंख्याः परिणा २ । १ । १० ॥ विभाषा २ । १ । ११ ॥ अपपरिबहिरञ्चवः पञ्चम्या २ । १ । १२ ॥

आङ्मर्यादाभिविध्योः २ । १ । १३ ॥ लक्षणेनाभिप्रती आभिमुख्ये २ । १ । १४ ॥ अनुर्यत्समया २ । १ । १५ ॥ यस्य चायामः २ । १ । १६ ॥ तिष्ठद्गुप्रभृतीनि च २ । १।१७॥ पारे मध्ये षष्ठ्या वा २ । १ । १८ ॥ संख्या वंश्येन २ । १ । १९ ॥ नदीभिश्च २ । १ । २० ॥ १ ॥ अन्यपदार्थे च संज्ञायाम् २ । १ । २१ ॥ तत्पुरुषः २।१।२२ ॥ द्विगुश्च २ । १ । २३ ॥ द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः २ । १ । २४ ॥ स्वयं क्तेन २ । १ । २५ ॥ खट्वा क्षेपे २ । १ । २६ ॥ सामि २ । १ । २७ ॥ कालाः २ । १ । २८ ॥ अत्यन्तसंयोगे च २ । १ । २९ ॥ तृतीया तत्कृतार्थेन गुणवचनेन २ । १ । ३० ॥ पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः २ । १ । ३१ ॥ कर्तृकरणे कृता बहुलम् २ । १ । ३२ ॥ कृत्यैरधिकार्थवचने २ । १ । ३३ ॥ अन्नेन व्यञ्जनम् २ । १ । ३४ ॥ भक्ष्येण मिश्रीकरणम् २ । १ । ३५ ॥ चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः २ । १ । ३६ ॥ पञ्चमी भयेन २ । १ । ३७ ॥ अपेतापोढमुक्तपतितापत्रस्तैरल्पशः २ । १ । ३८ ॥ स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन २ । १ । ३९ ॥ सप्तमी शौण्डैः २ । १ । ४० ॥ २ ॥ सिद्धशुष्कपक्वबन्धैश्च २ । १ । ४१ ॥ ध्वाङ्क्षेण क्षेपे १ । २ । ४२ ॥ कृत्यैर्ऋणे २ । १ । ४३ ॥ संज्ञायाम् २ । १ । ४४ ॥ क्तेनाहोरात्रावयवाः २ । १ । ४५ ॥ तत्र २ । १ । ४६ ॥ क्षेपे २ । १ । ४७ ॥ पात्रेसमितादयश्च २ । १ । ४८ ॥ पूर्वकालैकसर्वजरत्पुराण-नवकेवलाः समानाधिकरणेन २ । १ । ४९ ॥ दिक्संख्ये संज्ञायाम् २ । १ । ५० ॥ तद्धितार्थोत्तरपदसमाहारे च २ । १ । ५१ ॥ संख्यापूर्वो द्विगुः २ । १ । ५२ ॥ कुत्सि-तानि कुत्सनैः २ । १ । ५३ ॥ पापाणके कुत्सितैः २ । १ । ५४ ॥ उपमानानि सामा-न्यवचनैः २ । १ । ५५ ॥ उपमितं व्याघ्रादिभिः सामान्याप्रयोगे २ । १ । ५६ ॥ विशे-षणं विशेष्येण बहुलम् २ । १ । ५७ ॥ पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च २ । १ । ५८ ॥ श्रेण्यादयः कृतादिभिः २ । १ । ५९ ॥ क्तेन नञ्विशिष्टेनानञ् २ । १ । ६० ॥ ३ ॥ सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः २ । १ । ६१ ॥ वृन्दारकनागकुञ्जरैः पूज्य-मानम् २ । १ । ६२ ॥ कतरकतमौ जातिपरिप्रश्ने २ । १ । ६३ ॥ किं क्षेपे २ । १ । ६४ ॥ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः २ । १ । ६५ ॥ प्रशंसावचनैश्च २ । १ । ६६ ॥ युवा खलतिपलितवलिनजरतीभिः २ । १ । ६७ ॥ कृत्यतुल्याख्या अजात्या २ । १ । ६८ ॥ वर्णो वर्णेन २ । १ । ६९ ॥ कुमारः श्रमणादिभिः २ । १ । ७० ॥ चतुष्पादो गर्भिण्या २ । १ । ७१ ॥ मयूरव्यंसकादयश्च २ । १ । ७२ ॥ "समर्थोऽन्यपदार्थे च सिद्धशुष्कसन्महद्द्वादश" ॥

## द्वितीयः पादः ।

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे २ । २ । १ ॥ अर्धं नपुंसकम् । २ । २ । २ ॥ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् २ । २ । ३ ॥ प्राप्तापन्ने च द्वितीयया २ । २ । ४ ॥

काला परिमाणिना २ । २ । ५ ॥ नञ् २ । २ । ६ ॥ ईषदकृता २ । २ । ७ ॥ षष्ठी २ । २ । ८ ॥ याजकादिभिश्च २ । २ । ९ ॥ न निर्धारणे २ । २ । १० ॥ पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन २ । २ । ११ ॥ क्तेन च पूजायाम् २ । २ । १२ ॥ अधिकरणवाचिना च २ । २ । १३ ॥ कर्मणि च २ । २ । १४ ॥ तृजकाभ्यां कर्तरि २ । २ । १५ ॥ कर्तरि च २ । २ । १६ ॥ नित्यं क्रीडाजीविकयोः २ । २ । १७ ॥ कुगतिप्रादयः २ । २ । १८ ॥ उपपदमतिङ् २ । २ । १९ ॥ अमैवाव्ययेन २ । २ । २० ॥ १ ॥ तृतीयाप्रभृतीन्यन्यतरस्याम् २ । २ । २१ ॥ क्त्वा च २ । २ । २२ ॥ शेषो बहुव्रीहिः २ । २ । २३ ॥ अनेकमन्यपदार्थे २ । २ । २४ ॥ सङ्ख्ययाव्ययासन्नादूराधिकसङ्ख्याः सङ्ख्येये २ । २ । २५ ॥ दिङ्नामान्यन्तराले २ । २ । २६ ॥ तत्र तेनेदमिति सरूपे २ । २ । २७ ॥ तेन सहेति तुल्ययोगे २ । २ । २८ ॥ चार्थे द्वन्द्वः २ । २ । २९ ॥ उपसर्जनं पूर्वम् २ । २ । ३० ॥ राजदन्तादिषु परम् २ । २ । ३१ ॥ द्वन्द्वे घि २ । २ । ३२ ॥ अजाद्यदन्तम् २ । २ । ३३ ॥ अल्पाच्तरम् २ । २ । ३४ ॥ सप्तमीविशेषणे बहुव्रीहौ २ । २ । ३५ ॥ निष्ठा २ । २ । ३६ ॥ वाहिताग्न्यादिषु २ । २ । ३७ । कडाराः कर्मधारये २ । २ । ३८ ॥ "पूर्वापराधरोत्तर तृतीयाप्रभृतीन्यष्टादश" ॥

## तृतीयः पादः ।

अनभिहिते २ । ३ । १ ॥ कर्मणि द्वितीया २ । ३ । २ ॥ तृतीया च होश्छन्दसि २ । ३ । ३ ॥ अन्तरान्तरेणयुक्ते २ । ३ । ४ ॥ कालाध्वनोरत्यन्तसंयोगे २ । ३ । ५ ॥ अपवर्गे तृतीया २ । ३ । ६ ॥ सप्तमीपञ्चम्यौ कारकमध्ये २ । ३ । ७ ॥ कर्मप्रवचनीययुक्ते द्वितीया २ । ३ । ८ ॥ यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी २ । ३ । ९ ॥ पञ्चम्यपाङ्परिभिः २ । ३ । १० ॥ प्रतिनिधिप्रतिदाने च यस्मात् २ । ३ । ११ ॥ गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि २ । ३ । १२ ॥ चतुर्थी संप्रदाने २ । ३ । १३ ॥ क्रियार्थोपपदस्य च कर्मणि स्थानिनः २ । ३ । १४ ॥ तुमर्थाच्च भाववचनात् २ । ३ । १५ ॥ नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च २ । ३ । १६ ॥ मन्यकर्मण्यनादरे विभाषाप्राणिषु २ । ३ । १७ ॥ कर्तृकरणयोस्तृतीया २ । ३ । १८ ॥ सहयुक्तेऽप्रधाने २ । ३ । १९ ॥ येनाङ्गविकारः २ । ३ । २० ॥ १ ॥ इत्थंभूतलक्षणे २ । ३ । २१ ॥ सञ्ज्ञोऽन्यतरस्यां कर्मणि २ । ३ । २२ ॥ हेतौ २ । ३ । २३ ॥ अकर्तर्यृणे पञ्चमी २ । ३ । २४ ॥ विभाषा गुणेऽस्त्रियाम् २ । ३ । २५ ॥ षष्ठी हेतुप्रयोगे २ । ३ । २६ ॥ सर्वनाम्नस्तृतीया च २ । ३ । २७ ॥ अपादाने पञ्चमी २ । ३ । २८ ॥ अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते २ । ३ । २९ ॥ षष्ठ्यतसर्थप्रत्ययेन २ । ३ । ३० ॥ एनपा द्वितीया २ । ३ । ३१ ॥ पृथग्विनानानाभिस्तृतीयान्यतरस्याम् २ । ३ । ३२ ॥ करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य २ । ३ । ३३ ॥ दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्

२ । ३ । ३४ ॥ दूरान्तिकार्थेभ्यो द्वितीया च २ । ३ । ३५ ॥ सप्तम्यधिकरणे च २ । ३ । ३६ ॥ यस्य च भावेन भावलक्षणम् २ । ३ । ३७ ॥ षष्ठी चानादरे २ । ३ । ३८ ॥ स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च २ । ३ । ३९ ॥ आयुक्तकुशलाभ्यां चासेवायाम् २ । ३ । ४० ॥ २ ॥ यतश्च निर्धारणम् २ । ३ । ४१ ॥ पञ्चमी विभक्ते २ । ३ । ४२ ॥ साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः २ । ३ । ४३ ॥ प्रसितोत्सुकाभ्यां तृतीया च २ । ३ । ४४ ॥ नक्षत्रे च लुपि २ । ३ । ४५ ॥ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा २ । ३ । ४६ ॥ संबोधने च २ । ३ । ४७ ॥ सामन्त्रितम् २ । ३ । ४८ ॥ एकवचनं संबुद्धिः २ । ३ । ४९ ॥ षष्ठी शेषे २ । ३ । ५० ॥ ज्ञोऽविदर्थस्य करणे २ । ३ । ५१ ॥ अधीगर्थदयेशां कर्मणि २ । ३ । ५२ ॥ कृञः प्रतियत्ने २ । ३ । ५३ ॥ रुजार्थानां भाववचनानामज्वरेः २ । ३ । ५४ ॥ आशिषि नाथः २ । ३ । ५५ ॥ जासिनिप्रहणनाटक्राथपिषां हिंसायाम् २ । ३ । ५६ ॥ व्यवहृपणोः समर्थयोः २ । ३ । ५७ ॥ दिवस्तदर्थस्य २ । ३ । ५८ ॥ विभाषोपसर्गे २ । ३ । ५९ ॥ द्वितीया ब्राह्मणे २ । ३ । ६० ॥ ३ ॥ प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने २ । ३ । ६१ ॥ चतुर्थ्यर्थे बहुलं छन्दसि २।३।६२॥ यजेश्च करणे २ । ३ । ६३ ॥ कृत्वोर्थप्रयोगे कालेऽधिकरणे २ । ३ । ६४ ॥ कर्तृकर्मणोः कृति २ । ३ । ६५ ॥ उभयप्राप्तौ कर्मणि २ । ३ । ६६ ॥ क्तस्य च वर्तमाने २ । ३ । ६७ ॥ अधिकरणवाचिनश्च २ । ३ । ६८ ॥ न लोकाव्ययनिष्ठाखलर्थतृनाम् २ । ३ । ६९ ॥ अकेनोर्भविष्यदाधमर्ण्ययोः २ । ३ । ७० ॥ कृत्यानां कर्तरि वा २ । ३ । ७१ ॥ तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् २ । ३ । ७२ ॥ चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः २ । ३ । ७३ ॥
"अनभिहितइत्यनुवृत्तप्रश्नप्रेष्यब्रवोऽष्टादश" ॥

## चतुर्थः पादः ।

द्विगुरेकवचनम् २ । ४ । १ ॥ द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् २ । ४ । २ ॥ अनुवादे चरणानाम् २ । ४ । ३ ॥ अध्वर्युक्रतुरनपुंसकम् २ । ४ । ४ ॥ अध्ययनतोऽविप्रकृष्टाख्यानाम् २ । ४ । ५ ॥ जातिरप्राणिनाम् २ । ४ । ६ ॥ विशिष्टलिङ्गो नदीदेशोऽग्रामाः २ । ४ । ७ ॥ क्षुद्रजन्तवः २ । ४ । ८ ॥ येषां च विरोधः शाश्वतिकः २ । ४ । ९ ॥ शूद्राणामनिरवसितानाम् २ । ४ । १० ॥ गवाश्वप्रभृतीनि च २ । ४ । ११ ॥ विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् २ । ४ । १२ ॥ विप्रतिषिद्धं चानधिकरणवाचि २ । ४ । १३ ॥ न दधिपयआदीनि २ । ४ । १४ ॥ अधिकरणैतावत्त्वे च २ । ४ । १५ ॥ विभाषा समीपे २ । ४ । १६ ॥ स नपुंसकम् २ । ४ । १७ ॥ अव्ययीभावश्च २ । ४ । १८ ॥ तत्पुरुषोऽनञ्कर्मधारयः २ । ४ । १९ ॥ संज्ञायां कन्थोशीनरेषु २ । ४ । २० ॥ १ ॥ उपज्ञोपक्रमं तदाद्या-

चिख्यासायाम् २ । ४ । २१ ॥ छाया बाहुल्ये २ । ४ । २२ ॥ सभा राजाऽमनुष्यपूर्वा
२ । ४ । २३ ॥ अशाला च २ । ४ । २४ ॥ विभाषा सेनासुराच्छायाशालानिशानाम्
२ । ४ । २५ ॥ परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः २ । ४ । २६ ॥ पूर्ववदश्ववडवौ २ । ४ ।
२७ ॥ हेमन्तशिशिरावहोरात्रे च छन्दसि २ । ४ । २८ ॥ रात्राह्नाहाः पुंसि २ । ४ ।
२९ ॥ अपथं नपुंसकम् २ । ४ । ३० ॥ अर्धर्चाः पुंसि च २ । ४ । ३१ ॥ इदमोऽन्वा-
देशेऽशनुदात्तस्तृतीयादौ २ । ४ । ३२ ॥ एतदस्त्रतसोस्त्रतसौ चानुदात्तौ २ । ४ । ३३ ॥
द्वितीयाटौस्स्वेनः २ । ४ । ३४ ॥ आर्धधातुके २ । ४ । ३५ ॥ अदो जग्धिर्ल्यप्ति किति
२।४।३६॥ लुङ्सनोर्घस्लृ २ । ४ । ३७ ॥ घञपोश्च २ । ४।३८॥ बहुलं छन्दसि २।४।३९॥
लिट्यन्यतरस्याम् २ । ४ । ४० ॥ २ ॥ वेञो वयिः २ । ४ । ४१ ॥ हनो वध लिङि
२ । ४ । ४२ ॥ लुङि च २ । ४ । ४३ ॥ आत्मनेपदेष्वन्यतरस्याम् २ । ४ । ४४ ॥
इणो गा लुङि २ । ४ । ४५ ॥ णौ गमिरबोधने २ । ४ । ४६ ॥ सनि च २ ।४।४७॥
इङश्च २ । ४ । ४८ ॥ गाङ् लिटि २ । ४ । ४९ ॥ विभाषा लुङ्लृङोः २ । ४ । ५० ॥
णौ च सश्चङोः २ । ४ । ५१ ॥ अस्तेर्भूः २ । ४ । ५२ ॥ ब्रुवो वचिः २ । ४ । ५३ ॥
चक्षिङः ख्याञ् २ । ४ । ५४ ॥ वा लिटि २ । ४ । ५५ ॥ अजेर्व्यघञपोः २।४।५६ ॥
वायौ २ । ४ । ५७ ॥ ण्यक्षत्रियार्षञितो यूनि लुगणिञोः २ । ४ । ५८ ॥ पैलादि-
भ्यश्च २ । ४ । ५९ ॥ इञः प्राचाम् २ । ४ । ६० ॥ ३ ॥ न तौल्वलिभ्यः २ । ४ । ६१ ॥
तद्राजस्य बहुषु तेनैवास्त्रियाम् २ । ४ । ६२ ॥ यस्कादिभ्यो गोत्रे २ । ४ । ६३ ॥
यञञोश्च २ । ४ । ६४ ॥ अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च २ । ४ । ६५ ॥ ब-
ह्वच इञः प्राच्यभरतेषु २ । ४ । ६६ ॥ न गोपवनादिभ्यः २ । ४ । ६७ ॥ तिककि-
तवादिभ्यो द्वन्द्वे २ । ४ । ६८ ॥ उपकादिभ्योऽन्यतरस्यामद्वन्द्वे २ । ४ । ६९ ॥
आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् २ । ४ । ७० ॥ सुपो धातुप्रातिपदिकयोः २ ।
४ । ७१ ॥ अदिप्रभृतिभ्यः शपः २ । ४ । ७२ ॥ बहुलं छन्दसि २ । ४ । ७३ ॥
यङोऽचि च २ । ४ । ७४ ॥ जुहोत्यादिभ्यः श्लुः २ । ४ । ७५ ॥ बहुलं छन्दसि २ ।
४ । ७६ ॥ गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु २ । ४ । ७७ ॥ विभाषा घ्राधेट्शाछा-
सः २ । ४ । ७८ ॥ तनादिभ्यस्तथासोः २ । ४ । ७९ ॥ मन्त्रे घसह्वरणशवृदहाद्वृ-
च्कृगमिजनिभ्यो लेः २ । ४ । ८० ॥ ४ ॥ आमः २ । ४ । ८१ ॥ अव्ययादाप्सुपः
२ । ४ । ८२ ॥ नाव्ययीभावादतोऽम्त्वपञ्चम्याः २ । ४ । ८३ ॥ तृतीयासप्तम्योर्बहु-
लम् २ । ४ । ८४ ॥ लुटः प्रथमस्य डारौरसः २ । ४ । ८५ ॥ "द्विगुरुपज्ञोपक्रमं
वेञोवयिर्नतौल्वलिभ्यआमःपञ्च" ॥

## इति द्वितीयोऽध्यायः ।

